।। ओं गणेश शारदा गुरुभ्यो नमः ।।

।। श्री वेदव्यासाय नमः ।।

# ।। तैत्तिरीयोपनिषत् ।।

(१-४ प्रश्नाः)




*For copies of this book please contact-*
*Shri Parameswara Sharma*
*14/52 Manjula, Pestom Sagar*
*Chembur, Mumbai - 400 089*
*Tel: 524 2155.*

।। ओं गणेश शारदा गुरुभ्यो नमः ।।

।। श्री वेदव्यासाय नमः ।।

# ।। तैत्तिरीयोपनिषत् ।।

## (प्रथम-द्वितीय-तृतीय प्रश्नाः)




***For copies of this book please contact-***
***Shri Parameswara Sharma***
***14/52 Manjula, Pestom Sagar***
***Chembur, Mumbai - 400 089***
***Tel: 524 2155.***



## ।। श्री शृङ्गेरी श्रीजगद्गुरुमहासंस्थानम् ।।

मुद्रा

श्रीमत्परमहंसपरिव्राचकाचार्यवर्य पदवाक्यप्रमाणपारावारपारीण यमनियमासनप्राणायाम प्रत्याहार धारणाध्यानसमाध्यष्टाङ्गयोगानिष्ठाननिष्ठ तपश्चक्रवर्त्यनाद्यविच्छिन्न श्रीशङ्कराचार्यगुरुपरम्पराप्राप्त षड्दर्शनस्थापनाचार्य व्याख्यानसिंहासनाधीश्वर सकलनिगमागमसारहृदय सांख्यत्रयप्रतिपादक वैदिकमार्ग प्रवर्तक सर्वतन्त्र-स्वतन्त्रादिराजधानी विद्यानगर महाराजधानी कर्णाटकसिंहासन प्रतिष्ठापनाचार्य श्रीमद्राजाधिराजगुरुभूमण्डलाचार्य ऋष्यशृङ्गपुरवराधीश्वर तुङ्गभद्रातीरवासि श्रीमद्विद्याशङ्करपादपद्माराधक श्रीजगद्गुरु श्रीमदभिनवविद्यातीर्थस्वामि गुरुकरकमलसञ्जात

### ।। श्रीजगद्गुरु शृङ्गेरी श्रीमद्भारतीतीर्थस्वामिभिः ।।

अस्मदत्यन्तप्रियशिष्य श्रीपरमेश्वरशर्म विषये नारायणस्मरणपुरस्सर विरचिता आशिषस्समुल्लसन्तु।

भवन्तः वेदमधीत्य शिष्यानध्यापयन्तः अधुना लोकानामुपकाराय अत्यावश्यक वेदभागान् स्थूलाक्षरैः सस्वरं प्रकाशयन्तीति विदित्वा भृशं मोदामहे। अत्र हि रुद्रक्रमः महान्यासः उदकशान्तिरित्यादयः प्रकाशिता ये सर्वेषामत्यन्तमावश्यकाः। भवदीयोऽयमुद्यमः धर्मश्रद्धालूनामास्तिकानां प्रशंसापात्रमिति तु निश्चप्रचम्।

श्री शारदाचन्द्रमौळीश्वरयोरसीमया कृपया इमे ग्रन्थाः आस्तिकजन पाणिपल्लवान्यलंकुर्वन्तु भवन्तश्च श्रेयःपरम्पराभिस्समेधन्तामित्याशास्महे।।

इति नारायणस्मरणम्

शृङ्गगिरिः
प्रमाथिश्रावणकृष्णाष्टमी भार्गववासरः
३-९-१९९९

मुद्रा

SRI GURUBHYO NAMAHA






MUTUAL TRUST — FRIENDSHIP — TOLERANCE—OUR TRADITION

# Sri Sankara Jayanthi Celebration Committee

6, Savitha, 70,Pestomsagar, 2nd Road, Tilaknagar P.O., BOMBAY - 89.
Tel. Nos. : 5241864

Date ......

## FOREWORD

Shri Parameswara Sharma has been conducting Veda Classes in Pestom Sagar Chembur, for over two decades, and has trained over a hundred vidyarthis comprising of a wide range of asthikas covering school children, college boys, office-goers and retired elders. He has been associated with our Shri Sankara Jayanthi Celebration Committee for the past 16 years conducting Rudra-japa-abhisheka-puja along with his disciples.

Shri Parameswara Sharma's teaching skill and the recitation of vedic hymns by his disciples have been appreciated by many eminent vedic scholars and patrons of Religious & Cultural Organisations.

A momentous occasion was in June 1994, when, pleased with the excellent Ghana recitation by a few of Parameswara Sharma's young disciples,and in appreciation of his glorious spiritual service,HisHoliness Shri Bharathi Theertha Swamigal, Sringeri Mutt blessed and honoured him with a *'Ponnadai'*.

**Besides conducting veda classes, Shri Parameswara Sharma devotes his available time in compiling Vedic Literature into convenient books, in bold print, very useful to vidyarthis and religious practioners. He has compiled the following books :-**

**RUDRAM -CHAMAKAM**
**RUDRA KRAMAM**
**CHAMAKA KRAMAM**
**MAHANYASAM**
**UDAKA SHANTHI**
**ACHIDRAM**
**ASWAMEDHAM (1)**

**Copies of books compiled by Parameswara Sharma were presented to HIS HOLINESS SHRI BHARATHI THEERTHA SWAMIGAL, for His approval & blessings. His Holiness has gone through the books and has expressed His happiness and said that the books are very good and would be useful to the students**

**Appreciating his effort & dedication, His Holiness has blessed Shri Parameswara Sharma with a *SHREEMUKHAM.***

**I, on behalf of the Sri Sankara Jayanthi Celebration Committee, pray to Almighty to bestow upon Shri Parameswara Sharma, a healthy, blissful and long life to continue his noble social service of propagating Vedas and Vedic Culture among the youth and active citizens.**

**V. Venkitachalam**
**Secretary**
**Sri Sankara Jayanthi Celebration Committee**

**13th September 1999.**

# तैत्तिरीयोपनिषत्

## विषयानुक्रमणिका

।। ओं श्री गणेश शारदा गुरुभ्यो नमः।।

।। श्री वेदव्यासाय नमः ।।

# तैत्तिरीयोपनिषत्

## (प्रथमः प्रश्नः)

हरिः ओ( )म्

१ शन्नो मित्रश्शव्ँवरुणः।

शन्नो भवत्वर्यमा। शन्न इन्द्रो बृहस्पतिः।

शन्नो विष्णुरुरुक्रमः। नमो ब्रह्मणे।

नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि।

त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि।

ऋतव्ँवदिष्यामि। सत्यव्ँवदिष्यामि।

तन्मामवतु। तद्वक्तारमवतु। अवतु माम्।

अवतु वक्तारम्। ओंशान्तिश्शान्तिश्शान्तिः।।

००१

२ शीक्षाव्व्ँयाख्यास्यामः। वर्णस्स्वरः। मात्रा बलम्। साम सन्तानः। इत्युक्तश्शीक्षाद्ध्यायः।।

३ सहनौ यशः। सहनौ ब्रह्मवर्चसम्। अथातस्स७ँहिताया उपनिषदव्व्ँयाख्यास्यामः। पञ्चस्व- धिकरणेषु। अधिलोकमधिज्यौतिषमधि विद्यमधिप्रजमद्ध्यात्मम्। ता महा स७ँहिता इत्याचक्षते। अथाधि लोकम्। पृथिवी पूर्वरूपम्। द्यौरुत्तर रूपम्। आकाशस्सन्धिः।

००२

वायुस्सन्धानम्। इत्यधिलोकम्।

अथाधिज्यौतिषम्। अग्निः पूर्वरूपम्। आदित्य उत्तररूपम्। आपस्सन्धिः। वैद्युतस्सन्धानम्। इत्यधिज्यौतिषम्।

अथाधिविद्यम्। आचार्यः पूर्वरूपम्। अन्तेवास्युत्तररूपम्। विद्या सन्धिः। प्रवचनꣳ सन्धानम्। इत्यधिविद्यम्।

अथाधिप्रजम्। माता पूर्वरूपम्। पितोत्तररूपम्। प्रजा सन्धिः। प्रजननꣳ सन्धानम्। इत्यधिप्रजम्।

अथाद्ध्यात्मम्। अधराहनुः पूर्वरूपम्। उत्तराहनुरुत्तररूपम्। वाख्सन्धिः। जिह्वा सन्धानम्। इत्यद्ध्यात्मम्।

इतीमा महासꣳहिताः। य एवमेता महासꣳहिता व्याख्याता वेद। सन्धीयते प्रजया पशुभिः। ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन॥

४ यश्छन्दसामृषभो विश्वरूपः। छन्दोभ्योऽद्ध्यमृताथ्संबभूव। समेन्द्रो मेधया स्पृणोतु। अमृतस्य देवधारणो भूयासम्। शरीरं मे विचर्षणम्। जिह्वा मे मधुमत्तमा।

कर्णाभ्यां भूरिविश्रुवम्। ब्रह्मणः कोशोऽसि मेधयाऽपिहितः। श्रुतं मे गोपाय।

आवहन्ती वितन्वाना। [७] कुर्वाणाचीरमात्मनः। वासाँसि मम गावश्च। अन्नपाने च सर्वदा। ततो मे श्रियमावह।

लोमशां पशुभिस्सह स्वाहा।

आमायन्तु ब्रह्मचारिणस्स्वाहा।

विमायन्तु ब्रह्मचारिण स्वाहा।

प्रमायन्तु ब्रह्मचारिण स्स्वाहा।

दमायन्तु ब्रह्मचारिण स्स्वाहा।

शमायन्तु ब्रह्मचारिण स्स्वाहा।[८]

यशोजनेऽसानि स्वाहा।

श्रेयान् वस्यसोऽसानि स्वाहा।

तन्त्वा भग प्रविशानि स्वाहा।

स मा भग प्रविश स्वाहा।

तस्मिन्थ्सहस्रशाखे।

निभगाहन्त्वयि मृजे स्वाहा।

यथाऽऽपः प्रवताऽऽयन्ति। यथामासाअहर्जरम्।

एवं मां ब्रह्मचारिणः। धातरायन्तु सर्वत

स्स्वाहा। प्रतिवेशोऽसि प्रमाभाहि प्रमापद्यस्व।

[९]।।

५ भूर्भुवस्सुवरिति वा एतास्तिस्रो व्याहृतयः। तासामुहस्मैताञ्चतुर्थीम्। माहाचमस्यः प्रवेदयते। मह इति। तद्ब्रह्म। स आत्मा। अङ्गान्यन्या देवताः।

भूरिति वा अयल्लोँकः। भुव इत्यन्तरिक्षम्। सुवरित्यसौ लोकः।[१०]

मह इत्यादित्यः। आदित्येन वाव सर्वे लोका महीयन्ते।

भूरिति वा अग्निः। भुव इति वायुः। सुवरित्यादित्यः। मह इति चन्द्रमाः।

चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते।

भूरिति वा ऋचः। भुव इति सामानि।
सुवरिति यजूꣳषि।[११]।। मह इति ब्रह्म।
ब्रह्मणा वाव सर्वे वेदा महीयन्ते।

भूरिति वै प्राणः। भुव इत्यपानः।
सुवरिति व्यानः। मह इत्यन्नम्। अन्नेन वाव
सर्वे प्राणा महीयन्ते।

ता वा एताश्चतस्रश्चतुर्द्धा। चतस्र-
श्चतस्रो व्याहृतयः। ता यो वेद। स वेद ब्रह्म।
सर्वेऽस्मै देवा बलिमावहन्ति।[१२]।।

६ स य एषोऽन्तर् हृदय आकाशः।
तस्मिन्नयं पुरुषो मनोमयः। अमृतो हिरण्मयः।
अन्तरेण तालुके। य एषस्तन इवाववलंबते।
सेन्द्र योनिः। यत्रासौ केशान्तो विवर्तते।
व्यपोह्य शीरूषकपाले। भूरित्यग्नौ प्रति-
तिष्ठति। भुव इति वायौ।[१३] सुवरि-
त्यादित्ये। मह इति ब्रह्मणि। आप्नोति
स्वाराज्यम्। आप्नोति मनसस्पतिम्।
वाक्पतिश्चक्षुष्पतिः। श्रोत्रपति र्विज्ञानपतिः।
एतत्ततो भवति। आकाश शरीरं ब्रह्म।

सत्यात्म प्राणारामं मन आनन्दम्। शान्ति समृद्धममृतम्। इतिप्राचीन योग्योपास्व।[१४]

७ पृथिव्यन्तरिक्षन्द्यौ र्दिशोऽवान्तर दिशाः। अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि। आप ओषधयो वनस्पतय आकाश आत्मा। इत्यधिभूतम्।

अथादध्यात्मम्। प्राणो व्यानोऽपान उदान स्समानः। चक्षुश्श्रोत्रं मनो वाक्त्वक्। चर्म मा७ंस७ंस्नावास्थि मज्जा। एतदधि विधाय-ऱृषिरवोचत्। पाङ्क्तव्वाँ इद७ंसर्वम्।

पाङ्क्तेनैव पाङ्क्तँस्पृणोतीति।[१५]

८ ओमिति ब्रह्म। ओमितीद७ सर्वम्। ओमित्येतदनुकृति हस्म वा अप्योश्रावयेत्याश्रावयन्ति। ओमिति सामानि गायन्ति। ओ७शोमिति शस्त्राणि शँसन्ति। ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति। ओमिति ब्रह्मा प्रसौति। ओमित्यग्निहोत्रमनु - जानाति। ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मो-पाप्नवानीति। ब्रह्मैवोपाप्नोति।। [१६]।।

०११

९ ऋतञ्च स्वाद्ध्याय प्रवचने च।

सत्यञ्च स्वाद्ध्याय प्रवचने च।

तपश्च स्वाद्ध्याय प्रवचने च ।

दमश्च स्वाद्ध्याय प्रवचने च।

शमश्च स्वाद्ध्याय प्रवचने च।

अग्नयश्च स्वाद्ध्याय प्रवचने च।

अग्निहोत्रञ्च स्वाद्ध्याय प्रवचने च।

अतिथयश्च स्वाद्ध्याय प्रवचने च।

मानुषञ्च स्वाद्ध्याय प्रवचने च।

प्रजा च स्वाद्ध्याय प्रवचने च।

प्रजनश्च स्वाद्ध्याय प्रवचने च।

प्रजातिश्च स्वाद्ध्याय प्रवचने च।

सत्यमिति सत्यवचाराथीतरः।

तप इति तपो नित्यः पौरुशिष्टिः।

स्वाद्ध्याय प्रवचने एवेति नाको मौद्गल्यः।

तद्धि तपस्तद्धि तपः।। [१७] ।।

१० अहव्वृँक्षस्य रेरिवा। कीर्तिः पृष्ठङ्गिरेरिव। ऊद्ध्र्वपवित्रो वाजिनीव स्वमृतमस्मि। द्रविणꣳ सवर्चसम्। सुमेधा अमृतोक्षितः। इति त्रिशङ्को र्वेदानुवचनम्।। [१०] ।।

११ वेदमनूच्याचार्योऽ न्तेवासिनमनु-
शास्ति। सत्यव्वँद। धर्मञ्चर। स्वाद्ध्याया-
न्मा प्रमदः। आचार्याय प्रियन्धनमाहृत्य
प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न
प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न
प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्।
स्वाद्ध्याय प्रवचनाभ्यां न प्रमदितव्यम्।
[१९]। देवपितृकार्याभ्यां न प्रमदितव्यम्।
मातृदेवो भव। पितृदेवो भव। आचार्यदेवो
भव। अतिथिदेवो भव। यान्यनवद्यानि

कर्माणि। तानि सेवितव्यानि। नो इतराणि। यान्यस्माकꣳ सुचरितानि। तानि त्वयोपास्यानि। [२०]। नो इतराणि। ये के चास्मच्छ्रेयाꣳसो ब्राह्मणाः। तेषान्त्वयाऽऽसनेन प्रश्वसितव्यम्। श्रद्धया देयम्। अश्रद्धयाऽदेयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। संविदा देयम्। अथ यदि ते कर्म विचिकित्सा वा वृत्त विचिकित्सा वा स्यात्।[२१]। ये तत्र ब्राह्मणाः स्संमर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामास्स्युः।

यथा ते तत्र वर्तेरन्न्। तथा तत्र वर्तेथाः।
अथाभ्याख्यातेषु। ये तत्र ब्राह्मणास्संमर्शिनः।
युक्ता आयुक्ताः। अलूक्षा धर्मकामास्स्युः।
यथा ते तेषु वर्तेरन्न्। तथा तेषु वर्तेथाः। एष
आदेशः। एष उपदेशः। एषा वेदोपनिषत्।
एतदनुशासनम्। एवमुपासितव्यम्। एवमु-
चैतदुपास्यम्।। [२२]।।

१२ शन्नो मित्रश्शं व्वँरुणः। शन्नो
भवत्वर्यमा। शन्न इन्द्रो बृहस्पतिः। शन्नो
विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो।

०१६

त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्मावादिषम्। ऋतमवादिषम्। सत्यमवादिषम्। तन्मामावीत्। तद्वक्तारमावीत्। आवीन्माम्। आवीद्वक्तारम्।

ओं शान्तिश्शान्तिश्शान्तिः।।[२३]।।

*शन्नो मित्रश्शव्वँरुणः।० ० ०*
*० ० ०ओं शान्तिश्शान्तिश्शान्तिः।।*
*(प्रथमानुवाकवत्)।।*

************

# तैत्तिरीयोपनिषत्

## (द्वितीयः प्रश्नः)

सह नाववतु। सहनौ भुनक्तु। सह वीर्यङ्करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै। ओं शान्तिश्शान्तिश्शान्तिः।।

१ ब्रह्मविदाप्नोति परम्। तदेषाऽभ्युक्ता। सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितङ्गुहायां परमे व्योमन्न्। सोऽश्नुते सर्वान्कामान्थ्सह। ब्रह्मणा विपश्चितेति। तस्माद्वा एतस्मादात्मन आकाश स्संभूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः।

०१८

ओषधीभ्योऽन्नम्। अन्नात्पुरुषः। स वा एष
पुरुषोऽन्नरसमयः। तस्येदमेव शिरः।
अयन्दक्षिणः पक्षः। अयमुत्तरः पक्षः।
अयमात्मा। इदं पुच्छं प्रतिष्ठा। तदप्येष
श्लोको भवति।। [१]।।

२ अन्नाद्वै प्रजाः प्रजायन्ते। याः
काश्च पृथिवीँ श्रिताः। अथो अन्नेनैव
जीवन्ति। अथैनदपियन्त्यन्ततः। अन्नँ हि
भूतानाञ्ज्येष्ठम्। तस्मात्सर्वौषधमुच्यते।
सर्वव्वै तेऽन्नमाप्नुवन्ति। येऽन्नं ब्रह्मोपासते।

०१९

अन्नꣳ हि भूतानाञ्ज्येष्ठम्। तस्मात्सर्वौषध-
मुच्यते। अन्नाद्भूतानि जायन्ते। जातान्यन्नेन
वर्द्धन्ते। अद्यतेऽत्ति च भूतानि। तस्मादन्न-
न्तदुच्यत इति। तस्माद्वा एतस्मादन्नरस-
मयात्। अन्योऽन्तर आत्मा प्राणमयः। तेनैष
पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुष
विधताम्। अन्वयं पुरुषविधः। तस्य प्राण
एव शिरः। व्यानो दक्षिणःपक्षः। अपान
उत्तरः पक्षः। आकाश आत्मा। पृथिवी पुच्छं
प्रतिष्ठा। तदप्येष श्लोको भवति।।[२]।।

०२०

३ प्राणन्देवा अनुप्राणन्ति। मनुष्याः
पशवश्च ये। प्राणो हि भूतानामायुः।
तस्मात्सर्वायुषमुच्यते।

सर्वमेव त आयुर्यन्ति। ये प्राणं
ब्रह्मोपासते। प्राणो हि भूतानामायुः।
तस्मात्सर्वायुषमुच्यत इति।

तस्यैष एव शारीर आत्मा। यः पूर्वस्य।
तस्माद्वा एतस्मात्प्राणमयात्। अन्योऽन्तर
आत्मा मनोमयः।

तेनैष पूर्णः। स वा एष पुरुषविध एव।

तस्य पुरुषविधताम्। अन्वयं पुरुषविधः।

तस्य यजुरेव शिरः। ऋग्दक्षिणः पक्षः।
सामोत्तरः पक्षः। आदेश आत्मा।
अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा। तदप्येष
श्लोको भवति।।[३]।।

४ यतो वाचो निवर्तन्ते। अप्राप्य
मनसा सह। आनन्दं ब्रह्मणो विद्वान्।
न बिभेति कदाचनेति।

तस्यैष एव शारीर आत्मा। यः पूर्वस्य।
तस्माद्वा एतस्मान्मनोमयात्। अन्योऽन्तर

आत्मा विज्ञानमयः।

तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः।

तस्य श्रद्धैव शिरः। ऋतन्दक्षिणः पक्षः। सत्यमुत्तरः पक्षः। योग आत्मा। महः पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।।[४]।।

५ विज्ञानय्यँज्ञन्तनुते। कर्माणि तनुतेऽपि च। विज्ञानन्देवा स्सर्वे। ब्रह्मज्येष्ठ-मुपासते।

विज्ञानं ब्रह्म चेद्वेद। तस्माच्चेन्न प्रमाद्यति।

शरीरे पाप्मनो हित्वा। सर्वान्कामान्त्समश्नुत इति।

तस्यैष एव शारीर आत्मा। यः पूर्वस्य। तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्माऽऽनन्दमयः।

तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः।

तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्मपुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।।

[५]।।

६ असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनन्ततो विदुरिति।

तस्यैष एव शारीर आत्मा। यः पूर्वस्य। अथातोऽनु प्रश्ञाः। उताविद्वानमुल्लँोकं प्रेत्य। कश्चन गच्छती(३)।

आहो विद्वानमुल्लँोकं प्रेत्य। कश्चित्समश्नुता(३)उ। सोऽकामयत। बहुस्यां प्रजायेयेति।

स तपोऽतप्यत। सतपस्तप्त्वा।

इद॒ꣳसर्वमसृजत। यदि॒दङ्किञ्च। तथ्सृ॒ष्ट्वा। तदे॒वानु॒ प्राविशत्। तदनुप्र॒विश्य। सच्च॒त्यच्चाभवत्। निरु॒क्त॒ञ्चानिरुक्तञ्च। नि॒लय॒नञ्चानिलयनञ्च। वि॒ज्ञा॒नञ्चाविज्ञानञ्च। सत्यञ्चानृतञ्च सत्यम॒भवत्। यदिदङ्कि॒ञ्च। तथ्सत्यमित्याच॒क्षते। तदप्येष श्लोको भ॒वति।।[६]।।

७ अस॒द्वा इ॒दमग्र आसीत्। तत॒ो वै सदजायत। तदात्मानꣳस्वयमकु॒रुत।

**०२६**

तस्मात्तथ्सुकृतमुच्यत इति। यद्वैतथ्सुकृतम्।
रसो वै सः। रसꣳ ह्येवाय-ल्लँब्ध्वाऽऽनन्दी
भवति। कोह्येवान्यात्कः प्राण्यात्। यदेष
आकाश आनन्दो न स्यात्। एष ह्येवानन्द
याति। यदाह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽ-
निरुक्तेऽनिलयनेऽभयं प्रतिष्ठा-व्विँन्दते। अथ
सोऽभयङ्गतो भवति। यदाह्येवैष एतस्मिन्नु-
दरमन्तरङ्कुरुते। अथ तस्य भयं भवति।
तत्त्वेव भयव्विँदुषोऽमन्वानस्य। तदप्येष
श्लोको भवति।। [७]।।

८ भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चम इति।

सैषाऽऽनन्दस्य मीमाꣳसा भवति। युवास्यात्साधु युवाऽध्यायकः। आशिष्ठो दृढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्दः।

ते ये शतं मानुषा आनन्दाः। स एको मनुष्यगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकाम-

हतस्य।

ते ये शतं मनुष्यगन्धर्वाणा-मानन्दाः। स एको देवगन्धर्वाणा-मानन्दः। श्रोत्रियस्य चाकामहतस्य।

ते ये शत-न्देवगन्धर्वाणा-मानन्दाः। स एकः पितृणा-ञ्चिरलोक-लोकाना-मानन्दः। श्रोत्रियस्य चाकामहतस्य।

ते ये शतं पितृणा-ञ्चिरलोक -लोकाना-मानन्दाः। स एक आजानजाना- न्देवाना-मानन्दः। श्रोत्रियस्य चाकामहतस्य।

ते ये शतमाजानजानान्देवानामानन्दाः। स एकः कर्मदेवाना-न्देवाना-मानन्दः। ये कर्मणा देवानपियन्ति। श्रोत्रियस्य चाकामहतस्य।

ते ये शतङ्कर्मदेवाना-न्देवानामानन्दाः। स एको देवानामानन्दः। श्रोत्रियस्य चाकामहतस्य।

ते ये शतन्देवानामानन्दाः। स एक इन्द्रस्यानन्दः। श्रोत्रियस्य चाकामहतस्य।

ते ये शतमिन्द्रस्यानन्दाः। स एको

बृहस्पते॑रान॒न्दः। श्रोत्रियस्य चाका॑महत॒स्य।
ते ये शतं बृहस्पते॑रान॒न्दाः। स एकः
प्रजापते॑रान॒न्दः। श्रोत्रियस्य चाका॑महत॒स्य।
ते ये शतं प्रजापते॑रान॒न्दाः। स एको
ब्रह्मण॑ आन॒न्दः। श्रोत्रियस्य चाका॑महत॒स्य।]
स यश्चा॑यं पु॒रुषे। यश्चासा॑वादि॒त्ये।
स एक॑ः। स य॑ एव॒व्विँत्।
अस्माल्लोका॑त्प्रे॒त्य। एतमन्नमयमात्मान-
मुप॑सङ्क्रा॒मति। एतं प्राणमयमात्मानमुप॑-
सङ्क्रा॒मति। एतं मनोमय-मात्मानमुप॑-

सङ्क्रामति। एत-व्विँज्ञानमय-मात्मानमुप-
सङ्क्रामति। एतमानन्दमय-मात्मानमुप-
सङ्क्रामति। तदप्येष श्लोको भवति।।[८]
९ यतो वाचो निवर्तन्ते। अप्राप्य
मनसा सह। आनन्दं ब्रह्मणो विद्वान्।
न बिभेति कुतश्चनेति। एतꣳ ह वाव न
तपति। किमहꣳ साधुनाकरवम्। किमहं
पापमकरवमिति। स य एव-व्विँद्वानेते
आत्मानꣳस्पृणुते। उभे ह्येवैष एतेआत्मानꣳ
स्पृणुते। यएवव्वेँद। इत्युपनिषत्।। [९]।।

०३२

सह नाववतु। सह नौ भुनक्तु।
सह वीर्यङ्करवावहै। तेजस्विनावधीतमस्तु
माविद्विषावहै। ओं शान्तिश्शान्तिश्शान्तिः।।

*********

# तैत्तिरीयोपनिषत्

## (तृतीयः प्रश्नः)

सह नाववतु। सह नौ भुनक्तु।
सह वीर्यङ्करवावहै। तेजस्विनावधीतमस्तु
माविद्विषावहै। ओं शान्तिश्शान्तिश्शान्तिः।।

**********

०३४

१ भृगुर्वै वारुणिः। वरुणं पितरमुप-
ससार। अधीहि भगवो ब्रह्मेति।
तस्मा एतत्प्रोवाच। अन्नं प्राणञ्चक्षुश्श्रोत्रं
मनो वाचमिति। तꣳहोवाच।
यतो वा इमानि भूतानि जायन्ते। येन
जातानि जीवन्ति। यत्प्रयन्त्यभि संविशन्ति।
तद्विजिज्ञासस्व। तद्ब्रह्मेति। स तपोऽ-
तप्यत। स तपस्तप्त्वा।।

२ अन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभि संविशन्तीति।

तद्विज्ञाय। पुनरेव वरुणं पितरमुप-ससार। अधीहि भगवो ब्रह्मेति।

तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति।

सतपोऽतप्यत। सतपस्तप्त्वा।।

३ प्राणो ब्रह्मेति व्यजानात्।
प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते।
प्राणेन जातानि जीवन्ति। प्राणं प्रयन्त्यभि
संविशन्तीति।

तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार।
अधीहि भगवो ब्रह्मेति।

त ꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व।
तपो ब्रह्मेति।

स तपोऽतप्यत। स तपस्तप्त्वा।।

४ मनो ब्रह्मेति व्यजानात्।
मनसोह्येव खल्विमानि भूतानि जायन्ते।
मनसा जातानि जीवन्ति। मनः प्रयन्त्यभि
संविशन्तीति।

तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार।
अधीहि भगवो ब्रह्मेति।

त७ होवाच। तपसा ब्रह्म विजिज्ञासस्व।
तपो ब्रह्मेति।

स तपोऽतप्यत। स तपस्तप्त्वा।।

५ विज्ञानं ब्रह्मेति व्यजानात्।
विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते।
विज्ञानेन जातानि जीवन्ति। विज्ञानं
प्रयन्त्यभि संविशन्तीति।

तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार।
अधीहि भगवो ब्रह्मेति।

त७होवाच। तपसा ब्रह्म विजिज्ञासस्व।
तपो ब्रह्मेति।

स तपोऽतप्यत। स तपस्तप्त्वा।।

६ आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभि संविशन्तीति।

सैषा भार्गवी वारुणी विद्या। परमे व्योमन्प्रतिष्ठिता। य एवव्वेँद प्रतितिष्ठति।

अन्नवानन्नादो भवति। महान्भवति प्रजया पशुभि ब्रह्मवर्चसेन। महान्कीर्त्या।।

७ अन्नन्न निन्द्यात्। तद्व्रतम्। प्राणो वा अन्नम्। शरीरमन्नादम्। प्राणे शरीरं प्रतिष्ठितम्। शरीरे प्राणः प्रतिष्ठितः।

तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितव्ँवेद प्रतितिष्ठति।

अन्नवानन्नादो भवति। महान्भवति प्रजया पशुभि र्ब्रह्मवर्चसेन। महान्कीर्त्या।।

८ अन्नन्न परिचक्षीत। तद्व्रतम्। आपो वा अन्नम्। ज्योतिरन्नादम्। अप्सु ज्योतिःप्रतिष्ठितम्। ज्योतिष्यापः प्रतिष्ठिताः।

तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितव्वेँद प्रतितिष्ठति।

अन्नवानन्नादो भवति। महान्भवति प्रजया पशुभि ब्रह्मवर्चसेन। महान्कीर्त्या।।

०४२

१ अन्नं बहुकुर्वीत। तद्व्रतम्। पृथिवी वा अन्नम्। आकाशोऽन्नादः। पृथिव्यामाकाशः प्रतिष्ठितः। आकाशे पृथिवी प्रतिष्ठिता।

तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितँव्वेद प्रतितिष्ठति।

अन्नवानन्नादो भवति। महान्भवति प्रजया पशुभि र्ब्रह्मवर्चसेन। महान्कीर्त्या।।

१० न कञ्चन वसतौ प्रत्याचक्षीत। तद्व्रतम्। तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात्। अराद्ध्यस्मा अन्नमित्याचक्षते।

एतद्वै मुखतोऽन्नꣳ राद्धम्। मुखतोऽस्मा अन्नꣳ राद्ध्यते। एतद्वै मद्ध्यतोऽन्नꣳ राद्धम्। मद्ध्यतोऽस्मा अन्नꣳ राद्ध्यते। एतद्वा अन्ततोऽन्नꣳ राद्धम्। अन्ततोऽस्मा अन्नꣳ राद्ध्यते।[] य एवव्ँवेद।

क्षेम इति वाचि। योगक्षेम इति प्राणापानयोः। कर्मेति हस्तयोः। गतिरिति पादयोः। विमुक्तिरिति पायौ। इति मानुषीस्समाज्ञाः।

अथ दैवीः। तृप्तिरिति वृष्टौ। बलमिति विद्युति।[] यश इति पशुषु। ज्योतिरिति नक्षत्रेषु। प्रजातिरमृतमानन्द इत्युपस्थे। सर्वमित्याकाशे।

तत्प्रतिष्ठेत्युपासीत। प्रतिष्ठावान्भवति।

तन्मह इत्युपासीत। महान्भवति।

तन्मन इत्युपासीत। मानवान्भवति।

तन्नम इत्युपासीत। नम्यन्तेऽस्मै कामाः।

तद्ब्रह्मेत्युपासीत। ब्रह्मवान्भवति।

तद्ब्रह्मणः परिमर इत्युपासीत।

पर्येणं म्रियन्ते द्विषन्तस्सपत्नाः।

परियेऽप्रिया भ्रातृव्याः।

स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः। स य एवंवित्। अस्माल्लोकात्प्रेत्य।

एतमन्नमयमात्मानमुपसङ्क्रम्य।

एतं प्राणमयमात्मानमुपसङ्क्रम्य।

एतं मनोमयमात्मानमुपसङ्क्रम्य ।

एतव्विँज्ञानमयमात्मानमुपसङ्क्रम्य ।

एतमानन्दमयमात्मानमुपसङ्क्रम्य ।

इमाल्लोँकान्कामान्नीकामरूप्यनुसञ्चरन्न् ।

एतथ्साम गायन्नास्ते ।

हा(३)वुहा(३)वुहा(३)वु ।[]

अहमन्नमहमन्नमहमन्नम् ।

अहमन्नादो(२)हमन्नादो(२)हमन्नादः ।

अहँश्लोककृदहँश्लोककृदहँश्लोककृत्

अहमस्मि प्रथमजा ऋता(३)स्य ।

पूर्वन्देवेभ्यो अमृतस्य ना(३)भा इ।

यो मा ददाति स इदेवमा(३)वाः।

अहमन्नमन्नमदन्तमा(३)द्मि।

अहव्विँश्वं भुवनमभ्यभवाम्। सुवर्न ज्योतीः।

य एवव्वँेद। इत्युपनिषत्।।[१०]

सहनाववतु। सह नौ भुनक्तु।

सह वीर्यङ्करवावहै।

तेजस्विनावधीतमस्तु मा विद्विषावहै।

ओं शान्ति श्शान्ति श्शान्तिः।।

।। हरिः ओ(३)म्।।

।। ओं गणेश शारदा गुरुभ्यो नमः ।।

।। श्री वेदव्यासाय नमः ।।

# ।। तैत्तिरीयोपनिषत् ।।

## (चतुर्थः प्रश्नः)

*For copies of this book please contact-*

*Shri Parameswara Sharma*
*14/52 Manjula, Pestom Sagar*
*Chembur, Mumbai - 400 089*
*Tel: 524 2155.*

# तैत्तिरीयोपनिषत्

## (चतुर्थः प्रश्नः)

## विषयानुक्रमणिका

# तैत्तिरीयोपनिषत्

## (चतुर्थः प्रश्नः)

## विषयानुक्रमणिका

# तैत्तिरीयोपनिषत्
## (चतुर्थः प्रश्नः)

### विषयानुक्रमणिका



*************

।।ओं श्रीगणेश शारदा गुरुभ्यो नमः।।

।।श्रीवेदव्यासाय नमः।।

# तैत्तिरीयोपनिषत्

## (चतुर्थः प्रश्नः)

हरिः ओ(४)म्

सहनाववतु।

सहनौ भुनक्तु।

सह वीर्यङ्करवावहै।

तेजस्विनावधीतमस्तु माविद्विषावहै।

ओं शान्तिश्शान्तिश्शान्तिः।।

१ अम्भस्य पारे भुवनस्य मद्ध्ये नाकस्य पृष्ठे महतो महीयान्। शुक्रेण ज्योतीꣳषि समनु प्रविष्टः प्रजापतिश्चरति गर्भे अन्तः।।

यस्मिन्निदꣳसञ्च विचैति सर्वय्यँस्मिन्देवा अधि विश्वे निषेदुः। तदेव भूतन्तदु भव्यमा इदन्तदक्षरे परमे व्योमन्न्।।

येनावृतङ्खञ्च दिवं महीञ्च येनादित्य-स्तपति तेजसा भ्राजसा च। यमन्त-स्समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः।।

यतः प्रसूता जगतः प्रसूती तोयेन
जीवान्व्यचसर्ज भूम्याम्। यदोषधीभिः पुरुषा-
न्पशूँश्च विवेश भूतानि चराचराणि।।
अतः परन्नान्यदणीयसꣳ हि परात्पर-
य्यँन्महतो महान्तम्। यदेकमव्यक्तमनन्त
रूपव्विँश्वं पुराणन्तमसः परस्तात्।। [१]।।
तदेवर्तन्तदु सत्यमाहु-स्तदेव ब्रह्म
परमङ्कवीनाम्। इष्टापूर्तं बहुधा जात-
ञ्जायमान-व्विँश्वं बिभर्ति भुवनस्य नाभिः।।
तदेवाग्नि-स्तद्वायु-स्तथ्सूर्य-स्तदु चन्द्रमाः।

तदेव शुक्रममृतन्तद्ब्रह्म तदापस्स प्रजापतिः।
सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि।
कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः।।
अर्द्धमासा मासा ऋतवस्सवँत्सरश्च
कल्पन्ताम्। स आपः प्रदुघे उभे इमे
अन्तरिक्षमथो सुवः।।
नैनमूर्द्ध्वन्न तिर्यञ्चन्न मद्ध्ये परिजग्रभत्।
न तस्येशे कश्चन तस्य नाम महद्यशः।।[२]
न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा
पश्यति कश्च नैनम्। हृदा मनीषा मनसाऽभि

क्लृप्तो य एनव्विँदुरमृतास्ते भवन्ति।।

अद्भ्यस्संभूतो हिरण्यगर्भ इत्यष्टौ।।

एष हि देवः प्रदिशोऽनु सर्वाः पूर्वो हि जातस्स उ गर्भे अन्तः। स विजायमान स्स जनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति विश्वतो मुखः।।

विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो हस्त उत विश्वतस्पात्। संबाहुभ्यान्नमति संपतत्रै र्द्यावापृथिवी जनयन्देव एकः।।

वेनस्तत्पश्यन्विश्वा भुवनानि विद्वान् यत्र

विश्वं भवत्येकं नीळम्। यस्मिन्निदꣳ सञ्च विचैकꣳस ओतः प्रोतश्च विभु प्रजासु।।

प्रतद्वोचे अमृतन्नु विद्वान्गान्धर्वो नाम निहितङ्गुहासु। [३]। त्रीणि पदा निहिता गुहासु यस्तद्वेद सवितुः पितासत्।।

स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा । यत्र देवा अमृत-मानशाना स्तृतीये धामान्यभ्यैरयन्त।।

परिद्यावापृथिवी यन्ति सद्यः परि लोकान्परि दिशः परि सुवः। ऋतस्य तन्तुं

वितत व्विँचृत्य तदपश्यत्तदभवत्प्रजासु ।।

परीत्य लोकान्परीत्य भूतानि परीत्य

सर्वाः प्रदिशो दिशश्च। प्रजापतिः प्रथमजा

ऋतस्यात्मनाऽऽत्मानमभि संबभूव ।।

सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्।

सनिं मेधामयासिषम् ।।

उद्दीप्यस्व जातवेदोऽपघ्नन्निर्ऋतिं मम।

[४]। पशूँश्च मह्यमावह जीवनञ्च दिशो

दिश ।।

मानो हिँसीज्जातवेदो गामश्वं पुरुष-

५५

ञ्जगत्। अबिभ्रदग्न आगहि श्रिया मा परि
पातय।।

पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य
धीमहि। तन्नो रुद्रः प्रचोदयात्।।

तत्पुरुषाय विद्महे महादेवाय धीमहि।
तन्नो रुद्रः प्रचोदयात्।।

तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि।
तन्नो दन्तिः प्रचोदयात्।।

तत्पुरुषाय विद्महे चक्रतुण्डाय धीमहि।
[५]।। तन्नो नन्दिः प्रचोदयात्।।

तत्पुरुषाय विद्महे महासेनाय धीमहि। तन्नष्षण्मुखः प्रचोदयात्।।

तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि। तन्नो गरुडः प्रचोदयात्।।

वेदात्मनाय विद्महे हिरण्यगर्भाय धीमहि। तन्नो ब्रह्म प्रचोदयात्।।

नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात्।।

वज्रनखाय विद्महे तीक्ष्णदꣳष्ट्राय धीमहि। तन्नो नारसिꣳहः प्रचोदयात्।।

भास्कराय विद्महे महद्द्युतिकराय धीमहि। तन्नो आदित्यः प्रचोदयात्।।

वैश्वानराय विद्महे लालीलाय धीमहि। तन्नो अग्निः प्रचोदयात्।।

कात्यायनाय विद्महे कन्यकुमारि धीमहि। तन्नो दुर्गिः प्रचोदयात्।।

सहस्र परमा देवी शतमूला शताङ्कुरा। सर्वँ हरतु मे पापन्दूर्वा दुस्स्वप्ननाशनी।।

काण्डात्काण्डात्प्ररोहन्ती परुषःपरुषः परि। [७]। एवानो दूर्वे प्रतनु सहस्रेण

शतेन च॥

या शतेन प्रतनोषि सहस्रेण विरोहसि। तस्यास्ते देवीष्टके विधेम हविषा वयम्॥

अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरा। शिरसा धारयिष्यामि रक्षस्व मां पदे पदे॥

भूमिर्धेनु धरणी लोक धारिणी। उद्धृताऽसि वराहेण कृष्णेन शतबाहुना॥

मृत्तिके हन मे पापय्यँन्मया दुषकृतङ्-कृतम्। मृत्तिके ब्रह्मदत्ताऽसि काश्यपेनाभि

मन्त्रिता। मृत्तिके देहि मे पुष्टिन्त्वयि सर्वं प्रतिष्ठितम्।[८]।।

मृत्तिके प्रतिष्ठिते सर्वन्तन्मे निर्णुद मृत्तिके। तया हतेन पापेन गच्छामि परमाङ्गतिम्।।

यत इन्द्र भयामहे ततो नो अभयङ्कृधि। मघवञ्च्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि।।

स्वस्तिदा विशस्पति र्वृत्रहा विमृधो वशी। वृषेन्द्रः पुर एतु न स्स्वस्तिदा अभयङ्करः।

स्वस्तिन इन्द्रो वृद्धश्रवा स्स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमि-स्स्वस्ति नो बृहस्पति र्दधातु।।

आपान्तमन्यु- स्तृपलप्रभर्मा धुनि शिमीवाञ्च्छरुमाँ ऋजीषी। सोमो विश्वा-न्यतसावनानि नार्वागिन्द्रं प्रतिमानानि देभुः।।

ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमत-स्सुरुचो वेन आवः। स बुद्ध्निया उपमा अस्य विष्ठा स्सतश्च योनिमसतश्च विवः।।

स्योना पृथिवि भवा नृक्षरा निवेशनी। यच्छा न श्शर्म सप्रथाः।।

गन्धद्वारान्दुराधर्षा- न्नित्यपुष्टाङ्-करीषिणीम्। ईश्वरीꣳ सर्व भूतानान्तामिहो-पह्वये श्रियम्।।

श्रीर्मे भजतु। अलक्ष्मीर्मे नश्यतु। विष्णुमुखा वै देवाश्छन्दोभिरिमा- ल्लँोकान-नपजय्यमभ्यजयन्न्। महाꣳ इन्द्रो वज्रबाहु-ष्षोडशी शर्म यच्छतु।।[१०]।।

स्वस्तिनो मघवा करोतु हन्तु पाप्मानय्यँो

ऽस्मान्द्वेष्टि॥

सोमानꣳ स्वरणङ्कृणुहि ब्रह्मणस्पते। कक्षीवन्तय्यँ औशिजम्। शरीरय्यँज्ञशमलङ्-कुसीदन्तस्मिन्त्सीदतु योऽस्मान्द्वेष्टि॥

चरणं पवित्र व्विँततं पुराण य्येन पूत-स्तरति दुष्कृतानि। तेन पवित्रेण शुद्धेन पूता अति पाप्मानमरातिन्तरेम॥

सजोषा इन्द्र सगणो मरुद्भि स्सोमं पिब वृत्रहञ्छूर विद्वान्। जहि शत्रूꣳ-रपमृधो नुदस्वाथाभयङ्कृणुहि विश्वतो नः॥

## ६३

सुमित्रा न आप ओषधय स्सन्तु दुर्मित्रा-
स्तस्मै भूयासु योऽस्मान्द्वेष्टि यञ्च
वयन्द्विष्मः।।

आपो हिष्ठा मयोभुवस्ता न ऊर्जे
दधातन।[११]। महे रणाय चक्षसे। यो वः
शिवतमो रस स्तस्य भाजयतेह नः।
उशतीरिव मातरः। तस्मा अरङ्गमाम वो
यस्य क्षयाय जिन्वथ। आपो जनयथा च
नः।।

हिरण्यशृङ्ग व्वँरुणं प्रपद्ये तीर्थं मे देहि याचितः। यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः।।

यन्मे मनसा वाचा कर्मणा वा दुष्कृतङ्कृतम्। तन्न इन्द्रो वरुणो बृहस्पति-स्सविता च पुनन्तु पुनः पुनः।।

नमोऽग्नयेऽफ्सुमते नम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽद्भ्यः।[१२]।

यदपाङ्क्रूर-य्यँदमेद्ध्य- य्यँदशान्तन्तदप-गच्छतात्।।

अत्याशना-दतीपाना-द्यच्च उग्रात् प्रतिग्रहात्। तन्नो वरुणो राजा पाणिना ह्यवमर्शतु।।

सोऽहमपापो विरजो निर्मुक्तो मुक्तकिल्बिषः। नाकस्य पृष्ठमारुह्य गच्छेद्-ब्रह्मसलोकताम्।।

यश्चाप्सु वरुण स्स पुनात्वघमर्षणः।।

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमꣳ सचता परुष्णिया। असिक्निया मरुद्वृधे वितस्तयाऽऽर्जीकीये शृणुह्या सुषोमया।

ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽद्ध्यजायत।
ततो रात्रिरजायत ततस्समुद्रो अर्णवः।[१३]।
समुद्रादर्णवादधि सव्वँथ्सरो अजायत।
अहोरात्राणि विदधद्विश्वस्य मिषतो वशी।।
सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्।
दिवञ्च पृथिवीञ्चान्तरिक्षमथो सुवः।।
यत्पृथिव्याँ रजस्स्वमान्तरिक्षे विरोदसि।
इमाँ स्तदापो वरुणः पुनात्वघमर्षणः।
पुनन्तु वसवः पुनातु वरुणः पुनात्वघमर्षणः
एष भूतस्य मद्ध्ये भुवनस्य गोप्ता।

एष पुण्यकृता ल्लोँकानेष मृत्योर्हिरण्मयम्।
द्यावापृथिव्योर् हिरण्मयꣳ सꣳश्रितꣳ सुवः।
[१४]। स नस्सुवस्सꣳशिशाधि।।

आर्द्रं ज्वलति ज्योतिरहमस्मि।
ज्योतिर्ज्वलति ब्रह्माहमस्मि। योऽहमस्मि
ब्रह्माहमस्मि। अहमस्मि ब्रह्माहमस्मि।
अहमेवाहं माञ्जुहोमि स्वाहा।।

अकार्यकार्यवकीर्णी स्तेनो भ्रूणहा
गुरुतल्पगः। वरुणोऽपामघमर्षण-स्तस्मात्-
पापात्प्रमुच्यते।।

रजोभूमि-स्त्वमा॒ᳪ रोदयस्व प्रवदन्ति धीराः।।

आक्रान्थ्समुद्रः प्रथमे विधर्मञ्जनयन् प्रजा भुवनस्य राजा। वृषा पवित्रे अधि सानो अव्ये बृहथ्सोमो वावृधे सुवान इन्दुः।।

[१५]।। परस्ताद्यशो निहितङ्गुहासु मम चक्रतुण्डाय धीमहि तीक्ष्णदᳪष्ट्रायधीमहि परि प्रतिष्ठितन्देभु र्यच्छतु दधातनाद्भ्योऽर्णव स्सुवो राजैकञ्च।। रुद्रो रुद्रश्च दन्तिश्च नन्दिष्षणमुख एव च। गरुडो ब्रह्म विष्णुश्च नारसिᳪह स्तथैव च। आदित्योऽग्निश्च दुर्गिश्च क्रमेण द्वादशांभसि।। ममवचमसुवे नावभावै कात्यायनाय।।

२ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुन्दुरिता-त्यग्निः।।

तामग्निवर्णान्तपसा ज्वलन्तीं वैरोचनीङ्-कर्मफलेषु जुष्टाम्। दुर्गान्देवी॑ँ शरणमहं प्रपद्ये सुतरसि तरसे नमः।।

अग्ने त्वं पारया नव्यो अस्मान्थ्स्वस्तिभिरति दुर्गाणि विश्वा। पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शय्योः।।

विश्वानि नो दुर्गहा जातवेदस्सिन्धुन्न नावा
दुरिताऽति पर्षि। अग्ने अत्रिवन्मनसा
गृणानोऽस्माकं बोद्ध्यविता तनूनाम्।।

पृतनाजितꣳ सहमानमुग्रमग्निꣳ हुवेम
परमाथ्सधस्थात्। स नः पर्षदति दुर्गाणि
विश्वा क्षामद्देवो अति दुरितात्यग्निः।।

प्रत्नोषि कमीड्यो अद्ध्वरेषु सनाच्च
होता नव्यश्च सत्सि। स्वाञ्चाग्ने तनुवं
पिप्रयस्वास्मभ्यञ्च सौभगमायजस्व।।

गोभि-र्जुष्टमयुजो निषिक्तन्तवेन्द्र विष्णो-
रनु सञ्चरेम। नाकस्य पृष्ठमभि सव्वँसानो
वैष्णवी ल्लोँक इह मादयन्ताम्।।[१४]।।

दुरितात्यग्निश्चत्वारि च।।

३ भूरन्नमग्नये पृथिव्यै स्वाहा भुवोऽन्न-
वाँयवेऽन्तरिक्षाय स्वाहा सुवरन्नमादित्याय
दिवे स्वाहा भूर्भुवस्सुवरन्नञ्चन्द्रमसे दिग्भ्य-
स्स्वाहा नमो देवेभ्य स्स्वधा पितृभ्यो
भूर्भुवस्सुवरन्नमोम्।। [१७]।।

४ भूरग्नये पृथिव्यै स्वाहा भुवो वायवे
ऽन्तरिक्षाय स्वाहा सुवरादित्याय दिवे स्वाहा
भूर्भुवस्सुवश्चन्द्रमसे दिग्भ्यस्स्वाहा नमो
देवेभ्य स्स्वधा पितृभ्यो भूर्भुवस्सुवरग्न
ओम्।। [१८]।।

५ भूरग्नये च पृथिव्यै च महते च
स्वाहा भुवो वायवे चान्तरिक्षाय च महते च
स्वाहा सुवरादित्याय च दिवे च महते च
स्वाहा भूर्भुवस्सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च
दिग्भ्यश्च महतेच स्वाहा नमो देवेभ्य स्स्वधा
पितृभ्यो भूर्भुवस्सुवर्महरोम्।। [१९]।।

६ पाहि नो अग्न एनसे स्वाहा। पाहि
नो विश्ववेदसे स्वाहा। यज्ञं पाहि विभावसो
स्वाहा। सर्वं पाहि शतक्रतो स्वाहा।।[२०]।।

७ पाहि नो अग्न एकया। पाह्युत द्वितीयया। पाह्यूर्जन्तृतीयया। पाहि गीर्भि-श्चतसृभि र्वसो स्वाहा।। [२१]।।

८ यश्छन्दसामृषभो विश्वरूप श्छन्दोभ्य श्छन्दाॐ स्याविवेश। सचा॑ शिक्यः पुरोवाचोपनिषदिन्द्रो ज्येष्ठ इन्द्रियाय ऋषिभ्यो नमो देवेभ्य स्स्वधा पितृभ्यो भूर्भुव-स्सुवश्छन्द ओम्।। [२२]।।

९ नमो ब्रह्मणे धारणं मे अस्त्व-
निराकरण-न्धारयिता भूयासङ्- कर्णयो-
श्श्रुतं माच्योद्ध्वं ममामुष्य ओम्।। [२३]।।

१० ऋतन्तपस्सत्यन्तपश्श्रुतन्तप-
श्शान्तन्तपो दमस्तप श्शमस्तपो दानन्तपो
यज्ञन्तपो भूर्भुवस्सुव ब्रह्मैतदुपास्यैतत्तपः।।
[२४]।।

११ यथा वृक्षस्य संपुष्पितस्य
दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो
दूराद्गन्धो वाति यथाऽसिधाराङ्कर्तेऽवहिता-
मवक्रामे यद्युवे युवे ह वा विह्वयिष्यामि
कर्तं पतिष्यामी- त्येवममृता- दात्मान-
ञ्जुगुप्सेत्।। [२५]।।

१२ अणोरणीयान्महतो महीयानात्मा गुहाया-न्निहितोऽस्य जन्तोः। तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्।।

सप्तप्राणाः प्रभवन्ति तस्मात्सप्तार्चिष-स्समिधः स्सप्तजिह्वाः। सप्त इमे लोका येषु चरन्ति प्राणा गुहाशयान्निहिता स्सप्तसप्त।।

अतस्समुद्रा गिरयश्च सर्वेऽस्मात्स्यन्दन्ते सिन्धव स्सर्वरूपाः। अतश्च विश्वा ओषधयो रसाच्च येनैष भूतस्तिष्ठ-त्यन्तरात्मा।।

ब्रह्मा देवानां पदवीः कवीनामृषि र्विप्राणां महिषो मृगाणाम्। श्येनो गृद्ध्राणाꣳ स्वधिति र्वनानाꣳ सोमः पवित्रमत्येति रेभन्न्।।

अजामेका-ल्लोँहित शुक्ल कृष्णां बह्वीं प्रजाञ्जनयन्तीꣳ सरूपाम्। अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगा-मजोऽन्यः ।। [२६]।।

हꣳसश्शुचिष-द्वसुरन्तरिक्षस-द्धोता वेदिष-दतिथि-र्दुरोणसत्। नृषद्वरसदृतसद् व्योमस-दब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्।।

घृतं मिमिक्षिरे घृतमस्य योनि र्घृते श्रितं घृतमुवस्य धाम। अनुष्वधमावह मादयस्व स्वाहाकृत व्वँृषभ वक्षि हव्यम्।।

समुद्रादूर्मि र्मधुमाँ उदारदुपाँ शुना सममृतत्वमानट्। घृतस्य नाम गुह्य य्यँदस्ति जिह्वा देवानाममृतस्य नाभिः।।

वयन्नाम प्रब्रवामा घृतेनास्मिन् यज्ञे धारयामा नमोभिः। उप ब्रह्मा शृणव-च्छस्यमान-ञ्चतुश्शृङ्गोऽवमीद्-गौर एतत्।।

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे

शीरुषे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्याँ आविवेश।।[२७]।।

त्रिधाहितं पणिभि- र्गुह्यमानङ्गवि देवासो घृतमन्वविन्दन्न्। इन्द्र एकँ सूर्य एक-ञ्जजान वेनादेकँस्वधया निष्टतक्षुः।।

यो देवानां प्रथमं पुरस्ताद्विश्वाधियो रुद्रो महर्षिः। हिरण्यगर्भं पश्यत जायमानँ स नो देवश्शुभया स्मृत्यास्सयुँनक्तु।।

यस्मात्परन्नापरमस्ति किञ्चिद्यस्मान्नाणीयो

न ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो
दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्।।

न कर्मणा न प्रजया धनेन त्यागेनैके
अमृतत्वमानशुः। परेण नाकन्निहितङ्गुहाया-
व्विँभ्राजदेतद्यतयो विशन्ति।।

वेदान्त विज्ञान सुनिश्चितार्था स्सन्न्यास-
योगाद्यतय श्शुद्धसत्वाः। ते ब्रह्मलोके तु
परान्तकाले परामृतात्परिमुच्यन्ति सर्वे।।

दह्र व्विँपापं परमेश्मभूत य्यँत्पुण्डरीकं
पुरमंदध्यस ँस्थम्। तत्रापि दह्रङ्गगन-

व्विँशोक-स्तस्मिन् यदन्त-स्तदुपासितव्यम्।।

यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः।। [२८]।।

*अजोऽन्य आविवेश सर्वे चत्वारि च।।*

१३ सहस्रशीर्षन्देव व्विँश्वाक्ष व्विँश्व-शम्भुवम्। विश्वन्नारायणन्देवमक्षरं परमं पदम् विश्वतः परमान्नित्य व्विँश्वन्नारायणꣳ हरिम्। विश्वमेवेदं पुरुष-स्तद्विश्वमुपजीवति। पतिव्विँश्वस्यात्मेश्वरꣳ शाश्वतꣳ शिव-मच्युतम्। नारायणं महाज्ञेय व्विँश्वात्मानं परायणम्।।

नारायण परो ज्योतिरात्मा नारायणः परः। नारायण परं ब्रह्मतत्वन्नारायणः परः। नारायण परोद्ध्याता-द्ध्यानन्नारायणः परः।।

यच्च किञ्चि-ज्जगथ्सर्व-न्दृश्यते श्रूयतेऽपि वा।[२९]। अन्तर्बहिश्च तथ्सर्वं व्याप्य नारायण स्स्थितः।।

अनन्तमव्ययङ्कविꣳ समुद्रेऽन्त व्विँश्व-शंभुवम्। पद्मकोश प्रतीकाशꣳहृदयञ्चाप्य-धोमुखम्।।

अधो निष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति। ज्वालमाला कुलं भाती विश्वस्यायतनं महत्।।

सन्ततꣳशिलाभिस्तु लंबत्याकोश-

सन्निभम्। तस्यान्ते सुषिरꣳसूक्ष्मन्तस्मिन्थ्सर्वं प्रतिष्ठितम्।।

तस्य मद्ध्ये महानग्नि र्विश्वार्चि र्विश्वतो मुखः। सोऽग्रभु-ग्विभज-न्तिष्ठन्नाहार-मजरः कविः।।

तिर्य-गूद्ध्र्व-मधश्शायी रश्मय- स्तस्य सन्तता।। सन्तापयति स्वन्देहमापादतल मस्तगः। तस्य मद्ध्ये वह्निशिखा अणीयोद्ध्वा व्यवस्थितः।।

नीलतोयद मद्ध्यस्था- द्विद्युल्लेखेव भास्वरा। नीवार शूकवत्तन्वी पीता भास्वत्यणूपमा।।

तस्या शिखाया मद्ध्ये परमात्मा व्यवस्थितः। स ब्रह्म स शिवस्सहरि स्सेन्द्र- स्सोऽक्षरः परम स्स्वराट्।। [३०]।।

*(अपि वा सन्तता षट् च।।)*

१४ आदित्यो वा एष एतन्मण्डलन्तपति तत्र
ता ऋचस्तदृचा मण्डलꣳ स ऋचा
ल्लौँकोऽथ य एष एतस्मिन्मण्डलेऽर्चि
र्दीप्यते-
तानि सामानि स साम्ना ल्लौँकोऽथ य
एष एतस्मिन्मण्डलेऽर्चिषि पुरुष-
स्तानि यजूꣳषि स यजुषा मण्डलꣳ स
यजुषा ल्लौँक स्सैषा त्र्य्येव विद्या तपति य
एषोऽन्तरादित्ये हिरण्मयः पुरुषः।।[३१]।।

## ८७

१५ आदित्यो वै तेज ओजो बल य्यँश
श्चक्षु श्श्रोत्रमात्मा मनो मन्यु र्मनु र्मृत्यु
स्सत्यो मित्रो वायुराकाशः प्राणो लोकपालः
कः किङ्कन्तथ्सत्य-मन्नममृतो जीवो विश्वः
कतम स्स्वयंभुब्रह्मै-तदमृत एष पुरुष एष
भूतानामधिपति र्ब्रह्मण स्सायुज्यँ सलोकता-
माप्नोत्ये-तासामेव देवतानाँ सायुज्यँ
सार्ष्टिताँ समानलोकता-माप्नोति य एव
व्वँदेत्युपनिषत्।। [३२]।।

१६

निधनपतये नमः। निधनपतान्तिकाय नमः।
ऊर्ध्वाय नमः। ऊर्ध्वलिङ्गाय नमः।
हिरण्याय नमः। हिरण्यलिङ्गाय नमः।
सुवर्णाय नमः। सुवर्णलिङ्गाय नमः।
दिव्याय नमः। दिव्यलिङ्गाय नमः।
भवाय नमः। भवलिङ्गाय नमः।
शर्वाय नमः। शर्वलिङ्गाय नमः।
शिवाय नमः। शिवलिङ्गाय नमः।
ज्वलाय नमः। ज्वललिङ्गाय नमः।

आत्माय नमः। आत्मलिङ्गाय नमः।

परमाय नमः। परमलिङ्गाय नमः।

एतथ्सोमस्य सूर्यस्य सर्वलिङ्गँ

स्थापयति पाणिमन्त्रं पवित्रम्।। [३४]

१७ सद्योजातं प्रपद्यामि सद्योजाताय वै

नमो नमः। भवेभवे नातिभवे भवस्वमाम्।

भवोद्भवाय नमः।।[३५]।।

१८ वामदेवाय नमो ज्येष्ठाय नम

श्श्रेष्ठाय नमो रुद्राय नमः कालाय

नमः कलविकरणाय नमो बलविकरणाय
नमो बलाय नमो बलप्रमथनाय नमस्सर्व-
भूतदमनाय नमो मनोन्मनाय नमः।[३६]।।

१९ अघोरेभ्योऽथ घोरेभ्यो
घोरघोरतरेभ्यः। सर्वेभ्य स्सर्वशर्वेभ्यो नमस्ते
अस्तु रुद्ररूपेभ्यः।। [३७]।।

२० तत्पुरुषाय विद्महे महादेवाय
धीमहि। तन्नो रुद्रः प्रचोदयात्।। [३८]।।

२१ ईशान स्सर्वविद्यानामीश्वर स्सर्वभूतानां ब्रह्माधिपति र्ब्रह्मणोऽधिपति र्ब्रह्मा शिवो मे अस्तु सदाशिवोम्।। [३९]।।

२२ नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमो नमः।। [४०]।।

२३ ऋतꣳ सत्यं परं ब्रह्म पुरुषङ्कृष्ण पिङ्गलम्। ऊर्ध्वरेतं विरूपाक्ष व्विँश्वरूपाय वै नमो नमः।। [४१]।।

२४ सर्वो वै रुद्र स्तस्मै रुद्राय नमो अस्तु। पुरुषो वै रुद्र स्सन्महो नमो नमः। विश्वं भूतं भुवनञ्चित्रं बहुधा जातञ्जायमानञ्च यत्। सर्वो ह्येष रुद्र स्तस्मै रुद्राय नमो अस्तु।। [४२]।।

२५ कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे। वोचेम शन्तमꣳ हृदे। सर्वो ह्येष रुद्र स्तस्मै रुद्राय नमो अस्तु।। [४३]।।

२६ यस्य वैकङ्कत्यग्निहोत्र हवणी भवति प्रत्येवास्याहुतय स्तिष्ठन्त्यथो प्रतिष्ठित्यै।। [४४]।।

२७ कृणुष्वपाज इति पञ्च।। [४५]।।

२८ अदिति र्देवा गन्धर्वा मनुष्याः पितरोऽसुरा स्तेषाँ सर्वभूतानां माता मेदिनी महता मही सावित्री गायत्री जगत्युर्वी पृथ्वी बहुला विश्वा भूता कतमा काया सा सत्येत्यमृतेति वसिष्ठः।। [४६]।।

२९ आपो वा इदꣳ सर्वं विश्वा भूतान्यापः प्राणा वा आपः पशव आपोऽन्नमापोऽमृतमाप स्सम्राडापो विराडाप स्स्वराडाप श्छन्दाꣳस्यापो ज्योतीꣳष्यापो यजूꣳष्यापः सत्यमाप स्सर्वा देवता आपो भूर्भुवस्सुवराप ओम्।। [४७]।।

३० आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम्। पुनन्तु ब्रह्मणस्पति ब्रह्म पूता पुनातु माम्। यदुच्छिष्टमभोज्य य्यँद्वा

दुश्चरितं मम। सर्वं पुनन्तु मामापोऽसताञ्च
प्रतिग्रहꣳस्वाहा।। [४८]।।

३१ अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः। पापेभ्यो रक्षन्ताम्। यदह्ना पापमकारूषम्। मनसा वाचा हस्ताभ्याम्। पद्भ्यामुदरेण शिश्ना। अहस्तदवलुंपतु। यत्किञ्च दुरितं मयि। इदमहं माममृतयोनौ। सत्ये ज्योतिषि जुहोमि स्वाहा।। [४९]।।

३२ सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः। पापेभ्यो रक्षन्ताम्। यद्रात्रिया पापमकार्षम्। मनसा वाचा हस्ताभ्याम्। पद्भ्यामुदरेण शिश्ना। रात्रिस्तदवलुंपतु। यत्किञ्च दुरितं मयि। इदमहं माममृतयोनौ। सूर्ये ज्योतिषि जुहोमि स्वाहा।। [५०]।।

३३ ओमित्येकाक्षरं ब्रह्म। अग्निर्देवता ब्रह्म इत्यार्षम्। गायत्रञ्छन्दं परमात्मं सरूपम्। सायुज्यं विनियोगम्।।[५१]।।

३४ आयातु वरदा देवी अक्षरं ब्रह्म सम्मितम्। गायत्रीञ्छन्दसां मातेदं ब्रह्म जुषस्व मे। यदह्नात्कुरुते पापन्तदह्नात्प्रतिमुच्यते। यद्रात्रियात्कुरुते पापन्तद्रात्रियात् प्रतिमुच्यते। सर्व वर्णे महादेवि सन्ध्या विद्ये सरस्वति।। [५२]।।

३५ ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानान्धाम नामासि विश्वमसि विश्वायु स्सर्वमसि सर्वायुरभिभूरोङ्-गायत्रीमावाहयामि सावित्रीमावाहयामि

सरस्वतीमावाहयामि छन्दऋषीनावाहयामि श्रियमावाहयामि गायत्रिया गायत्रीच्छन्दो विश्वामित्र ऋषि स्सविता देवताऽग्निर्मुखं ब्रह्मा शिरो विष्णु र्हृदयꣳ रुद्रश्शिखा पृथिवी योनिः प्राणापान व्यानोदान समाना सप्राणा श्वेतवर्णा साङ्ख्यायन सगोत्रा गायत्री चतुर्विꣳशत्यक्षरा त्रिपदा षट्कुक्षिः पञ्च-शीर्षोपनयने विनियोग ओं भूः। ओं भुवः। ओꣳ सुवः। ओं महः। ओं जनः। ओं तपः। ओꣳसत्यम्।

ओन्तथ्सवितु र्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। ओमापो ज्योतीरसो ऽमृतं ब्रह्म भूर्भुवस्सुवरोम्।।[५३]।।

३६ उत्तमे शिखरे जाते भूम्यां पर्वत मूर्द्धनि। ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि यथा सुखम्। स्तुतो मया वरदा वेदमाता प्रचोदयन्ती पवने द्विजाता। आयुः पृथिव्या-न्द्रविणं ब्रह्मवर्चसं मह्यन्दत्वा प्रजातुं ब्रह्मलोकम्।। [५४]।।

३७ घृणिस्सूर्यं आदित्यो न प्रभावात्यक्षरम्। मधुक्षरन्ति तद्रसम्। सत्यव्वै तद्रसमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम्।। [५५]।।

३८ ब्रह्ममेतु माम्। मधुमेतु माम्।
ब्रह्ममेव मधुमेतु माम्। यास्ते सोम प्रजा
वथ्सोऽभि सो अहम्। दुष्ष्वप्नहन्दुरुष्वह।
यास्ते सोम प्राणाꣳस्ताञ्जुहोमि। त्रिसुपर्ण-
मयाचितं ब्राह्मणाय दद्यात्। ब्रह्महत्या व्वाँ
एते घ्नन्ति। ये ब्राह्मणा स्त्रिसुपर्णं पठन्ति। ते
सोमं प्राप्नुवन्ति। आसहस्रात्पङ्क्तिं पुनन्ति।
ओम्।। [५६]।।

३९ ब्रह्म मेधया। मधु मेधया। ब्रह्ममेव मधु मेधया। अद्यानो देवसवितः प्रजावथ्सावीस्सौभगम्। परा दुष्वप्नियꣳसुव। विश्वानि देवसवित र्दुरितानि परासुव। यद्भद्रन्तन्म आसुव। मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः। माद्ध्वी र्न स्सन्त्वोषधीः। मधु नक्तमुतोषसि मधुमत्पार्थिवꣳरजः। मधु द्यौरस्तु नः पिता। मधुमान्नो वनस्पति-र्मधुमाꣳ अस्तु सूर्यः। माद्ध्वी र्गावो भवन्तु नः। य इम-न्त्रिसुपर्ण-मयाचितं ब्राह्मणाय

दद्यात्। भ्रूणहत्या वाँ एते घ्नन्ति। ये ब्राह्मणा-स्त्रिसुपर्णं पठन्ति। ते सोमं प्राप्नुवन्ति। आसहस्रात्पङ्क्तिं पुनन्ति। ओम्।। [५७]।।

४० ब्रह्म मेधवा। मधु मेधवा। ब्रह्ममेव मधु मेधवा। ब्रह्मा देवानां पदवीः कवीनामृषि र्विप्राणां महिषो मृगाणाम्। श्येनो गृध्राणाꣳ स्वधिति र्वनानाꣳ सोमः पवित्रमत्येति रेभन्न्। हꣳस श्शुचिषद्वसु-रन्तरिक्षसद्धोता वेदिषदतिथि र्दुरोणसत्।

## १०३

नृषद्वरसदृतसद्-व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्। ऋचेत्वा रुचेत्वा समित्स्रवन्ति सरितो न धेनाः। अन्तर् हृदा मनसा पूयमानाः। घृतस्य धारा अभिचाकशीमि। हिरण्ययो वेतसो मद्ध्य आसाम्। तस्मिन्थ्सुपर्णो मधुकृत्कुलायी भजन्नास्ते मधु देवताभ्यः। तस्यासते हरय स्सप्ततीरे स्वधान्दुहाना अमृतस्य धाराम्। य इदन्त्रिसुपर्ण-मयाचितं ब्राह्मणाय दद्यात्। वीरहत्या व्वाँ एते घ्नन्ति। ये ब्राह्मणा-

स्त्रिसुपर्णं पठन्ति। ते सोमं प्राप्नुवन्ति।
आसहस्रात्पङ्क्तिं पुनन्ति। ओम्।। [५.८ ]।।

४१ मेधा देवी जुषमाणा न आगाद्विश्वाची भद्रा सुमनस्यमाना। त्वया जुष्टा नुदमानादुरुक्तान्-बृहद्वदेम विदथे सुवीराः। त्वया जुष्ट ऋषि र्भवति देवि त्वया ब्रह्माऽऽगत श्रीरुत त्वया। त्वया जुष्ट-श्चित्र विँन्दते वसु सा नो जुषस्व द्रविणो न मेधे।। [५९]।।

४२ मेधां म इन्द्रो ददातु मेधान्देवी सरस्वती। मेधां मे अश्विनावुभावाधत्तां

पुष्करस्रजा। अफ्सरासु च या मेधा गन्धर्वेषु च यन्मनः। दैवीं मेधा सरस्वती सा मां मेधा सुरभिं जुषताँस्वाहा।। [६०]।।

४३ आमां मेधा सुरभिं विश्वरूपा हिरण्यवर्णा जगती जगम्या। ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषन्ताम्।। [६१]।।

४४ मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियन्दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु।[६१]

४५ अपैतु मृत्युरमृतन्न आगन्वैवस्वतो नो अभयङ्कृणोतु। पर्ण व्वँनस्पतेरिवाभि न श्शीयता७रयिस्सचतान्न श्शचीपतिः।[६३]।।

४६ परं मृत्यो अनु परेहि पन्थाय्यँस्ते स्व इतरो देवयानात्। चक्षुष्मते श्रृण्वते ते ब्रवीमि मा नः प्रजा७रीरिषो मोत वीरान्।। [६४]।।

४७ वातं प्राणं मनसाऽन्वारभामहे प्रजापतिं य्यो भुवनस्य गोपाः। स नो मृत्यो-

स्त्रायतां पात्वँ हसो ज्योग्जीवा
जरामशीमहि।। [६५]।।

४८ अमुत्रभूयादध यद्यमस्य
बृहस्पते अभिशस्तेरमुञ्चः। प्रत्यौहतामश्विना
मृत्युमस्मा देवानामग्ने भिषजा शचीभिः[६६]

४९ हरिँ हरन्तमनुयन्ति देवा
विश्वस्येशान वृँषभं मतीनाम्। ब्रह्मसरूपमनु
मेदमागादयनं मा विवधी र्विक्रमस्व।।[६७]।

५० शल्कैरग्निमिन्धान उभौ लोकौ सनेमहम्। उभयो र्लोकयोर् ऋद्ध्वाऽति मृत्युं तराम्यहम्।। [६८]।।

५१ मा छिंदो मृत्यो मा वधीर्मा मे बल-व्विँवृहो मा प्रमोषीः। प्रजां मा मे रीरिष आयुरुग्र नृचक्षसन्त्वा हविषा विधेम।।[६९]

५१ मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम्। मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः।। [७०]।।

५३ मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। वीरान्मा नो रुद्र भामितो वधीर् हविष्मन्तो नमसा विधेम ते।। [७१]।।

५४ प्रजापते नत्वदेतान्यन्यो विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयँ स्याम पतयो रयीणाम्।। [७२]।।

५५ स्वस्तिदा विशस्पति र्वृत्रहा विमृधो वशी। वृषेन्द्रः पुर एतु न स्स्वस्तिदा अभङ्करः।। [७३]।।

५६ त्र्यम्बक य्यँजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्यो-र्मुक्षीय माऽमृतात्।। [७४]।।

५७ ये ते सहस्रमयुतं पाशा मृत्यो मर्त्याय हन्तवे। तान् यज्ञस्य मायया सर्वानवयजामहे।। [७५]।।

५८ मृत्यवे स्वाहा मृत्यवे स्वाहा ।।[७६]।।

५९ देवकृतस्यैनसोऽवयजनमसि स्वाहा।
मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा।
पितृकृतस्यैनसोऽवयजनमसि स्वाहा।
आत्मकृतस्यैनसोऽवयजनमसि स्वाहा।
अन्यकृतस्यैनसोऽवयजनमसि स्वाहा।
अस्मत्कृतस्यैनसोऽवयजनमसि स्वाहा।
यद्दिवा च नक्तञ्चैनश्चकृम तस्यावयजनमसि
स्वाहा। यथ्स्वपन्तश्च जाग्रतश्चैनश्चकृम
तस्यावयजनमसि स्वाहा। यथ्सुषुप्तश्च
जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा।

यद्विद्वा॑ꣳस॒ श्चावि॑द्वा॑ꣳस॒ श्चैन॑श्चकृ॒म तस्या॑व॒यज॑नमसि॒ स्वाहा॑। एनस एनसो॑ऽवयजनम॑सि स्वा॒हा।। [७७]।।

६० यद्वो॑ देवाश्चकृ॒म जि॒ह्वया॑ गु॒रु मन॑सो वा॒ प्रयु॑ती देव॒हेड॑नम्। अरा॑वा॒ यो नो॑ अ॒भि॑दु॒च्छु॒ना॒यते॒ तस्मि॒न्तदेनो॑ वसवो॒ निधेतन॒ स्वाहा॑।। [७८]।।

६१ कामोऽकारूषी॑-न्नमो॒ नमः। कामोऽ-कार्षीत्कामः करोति नाहङ्करोमि कामः कर्ता नाहङ्कर्ता काम॑ः कार॒यि॑ता नाह॑ङ्-

कारयिता एष ते काम कामाय स्वाहा।[७९]

६२ मन्युरकार्षीन्नमो नमः। मन्युर-कार्षीन्मन्युः करोति नाहङ्करोमि मन्युः कर्ता नाहङ्कर्ता मन्युः कारयिता नाहङ्-कारयिता एष ते मन्यो मन्यवे स्वाहा।।[८०]

६३ तिलाञ्जुहोमि सरसाँ सपिष्टा-न्गान्धार मम चित्ते रमन्तु स्वाहा। गावो हिरण्य-न्धन-मन्नपानँ सर्वेषाँश्रियै स्वाहा।। श्रियञ्च लक्ष्मिञ्च पुष्टिञ्च कीर्तिञ्-

नृण्यताम्। ब्रह्मण्यं बहु पुत्रताम्। श्रद्धामेधे प्रजास्सन्ददातु स्वाहा।। [८१]।।

६४ तिलाः कृष्णा स्तिलाश्श्वेता स्तिला स्सौम्या वशानुगाः। तिलाः पुनन्तु मे पाप- य्यँत्किञ्चिद्दुरितं मयि स्वाहा। चोरस्यान्न- न्नवश्राद्धं ब्रह्महा गुरुतल्पगः। गोस्तेयꣳ- सुरापानं भ्रूणहत्या तिलाशान्तिꣳ शमयन्तु स्वाहा। श्रीश्च लक्ष्मीश्च पुष्टीश्च कीर्तिञ्चानृण्यताम्। ब्रह्मण्यं बहुपुत्रताम्। श्रद्धामेधे प्रज्ञातु जातवेदस्सन्ददातु स्वाहा।। [८२]।।

६५ प्राणापान व्यानोदान समाना मे शुद्ध्यन्ता- ज्ज्योतिरह- व्विँरजा विपाप्मा भूयासꣳस्वाहा।

वाङ्मनश्चक्षु-श्श्रोत्र जिह्वा घ्राण रेतो बुद्ध्याकूति स्सङ्कल्पा मे शुद्ध्यन्ता- ज्ज्योतिरह- व्विँरजा विपाप्मा भूयासꣳ स्वाहा।

त्वक्चर्म माꣳस रुधिर मेदो मज्जा स्नायवोस्थीनि मे शुद्ध्यन्ता- ज्ज्योतिरह- व्विँरजा विपाप्मा भूयासꣳस्वाहा।

शिरः पाणि पाद पार्श्व पृष्ठोरूदर जङ्घ शिश्नोपस्थ पायवो मे शुद्ध्यन्ता ज्ज्योतिरह व्विँरजा विपाप्मा भूयासꣳस्वाहा।

उत्तिष्ठपुरुष हरित पिङ्गल लोहिताक्षि देहि देहि ददापयिता मे शुद्ध्यन्ताज्ज्योतिरह-व्विँरजा विपाप्मा भूयासꣳस्वाहा।। [८३]।।

६६ पृथिव्यापस्तेजो वायुराकाशा मे शुद्ध्यन्ता- ज्ज्योतिरह व्विँरजा विपाप्मा भूयासꣳस्वाहा।

शब्द स्परश रूप रस गन्धा मे
शुद्ध्यन्ता ज्योतिरह व्विँरजा विपाप्मा
भूयासꣳस्वाहा।

मनो वाक्काय कर्माणि मे शुद्ध्यन्ता-
ज्ज्योतिरह व्विँरजा विपाप्मा भूयासꣳस्वाहा।

अव्यक्तभावैरहङ्कारै ज्योतिरह व्विँरजा
विपाप्मा भूयासꣳस्वाहा।

आत्मा मे शुद्ध्यन्ता ज्ज्योतिरह व्विँरजा
विपाप्मा भूयासꣳस्वाहा।

अन्तरात्मा मे शुद्ध्यन्ता ज्ज्योतिरह-

र्व्विँरजा विपाप्मा भूयासꣳस्वाहा।

परमात्मा मे शुद्ध्यन्ता- ञ्ज्योतिरह-
र्व्विँरजा विपाप्मा भूयासꣳस्वाहा।

क्षुधे स्वाहा। क्षुत्पिपासाय स्वाहा।
विविट्ट्यै स्वाहा। ऋग्विधानाय स्वाहा।
कषोत्काय स्वाहा।

क्षुत्पिपासा मलाञ्ज्येष्ठामलक्ष्मी-र्नाशया-
म्यहम्। अभूतिमसमृद्धिञ्च सर्वान्निर्णुद मे
पाप्मानꣳस्वाहा। अन्नमय प्राणमय मनोमय

विज्ञानमय-मानन्दमय-मात्मा मे शुद्ध्यन्ता-
ज्जयोतिरह व्रिँरजा विपाप्मा भूयासꣳ
स्वाहा ।[८४]।।

६७ अग्नये स्वाहा। विश्वेभ्यो
देवेभ्य स्स्वाहा। ध्रुवाय भूमाय स्वाहा।
ध्रुवक्षितये स्वाहा। अच्युतक्षितये स्वाहा।
अग्नये स्विष्टकृते स्वाहा। धर्माय स्वाहा।
अधर्माय स्वाहा। अद्भ्यस्स्वाहा।
ओषधि-वनस्पतिभ्य स्स्वाहा। [८५]।।

रक्षोदेवजनेभ्य स्स्वाहा। गृह्याभ्य स्स्वाहा। अवसानेभ्य स्स्वाहा। अवसानपतिभ्य स्स्वाहा। सर्वभूतेभ्य स्स्वाहा। कामाय स्वाहा। अन्तरिक्षाय स्वाहा। यदेजति जगति यच्च चेष्टति नाम्नो भागो यन्नाम्ने स्वाहा। पृथिव्यै स्वाहा। अन्तरिक्षाय स्वाहा। [८६]।

दिवे स्वाहा। सूर्याय स्वाहा। चन्द्रमसे स्वाहा। नक्षत्रेभ्य स्स्वाहा। इन्द्राय स्वाहा। बृहस्पतये स्वाहा। प्रजापतये स्वाहा। ब्रह्मणे

स्वाहा। स्वधा पितृभ्यस्स्वाहा। नमो रुद्राय पशुपतये स्वाहा। [८७]। देवेभ्य स्स्वाहा। पितृभ्य स्स्वधाऽस्तु। भूतेभ्यो नमः। मनुष्येभ्यो हन्ता। प्रजापतये स्वाहा। परमेष्ठिने स्वाहा।

यथा कूप श्शतधार स्सहस्रधारो अक्षितः। एवा मे अस्तु धान्य॰ सहस्रधार-मक्षितम्। धनधान्यै स्वाहा।

ये भूताः प्रचरन्ति दिवा नक्तं बलिमिच्छन्तो वितुदस्य प्रेष्याः। तेभ्यो बलिं

पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपति र्दधातु स्वाहा।। [८८]।। ओषधिवनस्पतिभ्यस्स्वाहा ऽन्तरिक्षाय स्वाहा नमो रुद्रायपशुपतये स्वाहा वितुदस्य प्रेष्या एकञ्च।।

६८ ओन्तद्ब्रह्म। ओन्तद्वायुः। ओन्तदात्मा। ओन्तथ्सत्यम्। ओन्तथ्सर्वम्। ओन्तत्पुरोर्नमः। अन्तश्चरति भूतेषु गुहायां विश्वमूर्तिषु। त्वय्यँज्ञ स्त्वव्वँषट्कार स्त्वमिन्द्र स्त्व ँ रुद्र स्त्वव्विँष्णु स्त्वं ब्रह्म त्वं प्रजापतिः। त्वन्तदाप आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम्।। [८९]।।

६९ श्रद्धायां प्राणे निविष्टोऽमृत-
ञ्जुहोमि। श्रद्धायामपाने निविष्टोऽमृत-
ञ्जुहोमि। श्रद्धाया व्ँयाने निविष्टोऽमृत
ञ्जुहोमि। श्रद्धायामुदाने निविष्टोऽमृत-
ञ्जुहोमि। श्रद्धायाँ समाने निविष्टोऽमृत-
ञ्जुहोमि। ब्रह्मणि म आत्माऽमृतत्वाय।।

अमृतोपस्तरणमसि।।

श्रद्धायां प्राणे निविष्टोऽमृत- ञ्जुहोमि।
शिवो माविशाप्रदाहाय। प्राणाय स्वाहा।

श्रद्धायामपाने निविष्टोऽमृत- ञ्जुहोमि।
शिवो माविशाप्रदाहाय। अपानाय स्वाहा।
श्रद्धाया व्यँाने निविष्टोऽमृत ञ्जुहोमि।
शिवो माविशाप्रदाहाय। व्यानाय स्वाहा।
श्रद्धायामुदाने निविष्टोऽमृत- ञ्जुहोमि।
शिवो माविशाप्रदाहाय। उदानाय स्वाहा।
श्रद्धायाꣳसमाने निविष्टोऽमृत- ञ्जुहोमि।
शिवो माविशाप्रदाहाय। समानाय स्वाहा।
ब्रह्मणि म आत्माऽमृतत्वाय।।
अमृतापिधानमसि।।[९०]।।

७० श्रद्धायां प्राणे निविश्यामृतꣳ हुतम्। प्राणमन्नेनाप्यायस्व।

श्रद्धायामपाने निविश्यामृतꣳ हुतम्। अपानमन्नेनाप्यायस्व।

श्रद्धायाँ व्यँाने निविश्यामृꣳ हुतम्। व्यानमन्नेनाप्यायस्व।

श्रद्धायामुदाने निविश्यामृतꣳ हुतम्। उदानमन्नेनाप्यायस्व।

श्रद्धायाꣳसमाने निविश्यामृतꣳ हुतम्। समानमन्नेनाप्यायस्व।। [९१]।।

७१ अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठञ्च सामाश्रितः। ईश स्सर्वस्य जगतः प्रभु प्रीणाति विश्वभुक्।। [९२]।।

७२ वाङ्म आसन्न्। नसोः प्राणः। अक्ष्योश्चक्षुः। कर्णयो श्श्रोत्रम्। बाहुवो र्बलम्। ऊरुवोरोजः। अरिष्टा विश्वा-न्यङ्गानि तनूः। तनुवा मे सह नमस्ते अस्तु मा मा हिꣳसीः।। [९३]।।

७३ वयस्सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः। अपद्ध्वान्त-मूर्णुहि पूर्द्धिचक्षु र्मुमुग्ध्यस्मा- न्निधयेऽव बद्धान्।। [१४]।।

७४ प्राणानाङ्ग्रन्थिरसि रुद्रो मा विशान्तकः। तेनान्नेनाऽऽप्यायस्व।।[१५]।।

७५ नमो रुद्राय विष्णवे मृत्युर्मे पाहि।

७६ त्वमग्ने द्युभि स्त्वमाशु शुक्षणि स्त्वमद्भ्य स्त्वमश्मन स्परि। त्व वँनेभ्य

स्त्वमोषधीभ्य स्त्वन्नृणा-न्नृपते जायसे शुचिः।। [९७]।।

७७ शिवेन मे सन्तिष्ठस्व स्योनेन मे सन्तिष्ठस्व सुभूतेन मे सन्तिष्ठस्व ब्रह्मवर्चसेन मे सन्तिष्ठस्व यज्ञस्यर्द्धिमनु सन्तिष्ठस्वोप ते यज्ञ नम उप ते नम उप ते नमः।। [९८]।।

७८ सत्यं परं परꣳ सत्यꣳसत्येन न सुवर्गाल्लोकाच्च्यवन्ते कदाचन सताꣳ हि सत्य-न्तस्माथ्सत्ये रमन्ते-

तप इति तपो नानशनात्पर य्यँद्धि परन्तप स्तद्दुर्द्धर्ष-न्तद्दुराधर्ष-न्तस्मात्तपसि रमन्ते-

दम इति नियतं ब्रह्मचारिण स्तस्माद्दमे रमन्ते-

शम इत्यरण्ये मुनय स्तस्माच्छमे रमन्ते-

दानमिति सर्वाणि भूतानि प्रशꣳसन्ति

दानान्नाति दुश्चरन्तस्माद्दाने रमन्ते-

धर्म इति धर्मेण सर्वमिदं परिगृहीत-

न्धर्मान्नाति दुष्करन्तस्मा-द्धर्मे रमन्ते-

प्रजन इति भूयाँ स स्तस्माद्-भूयिष्ठाः

प्रजायन्ते तस्माद्- भूयिष्ठाः प्रजनने रमन्ते-

(अ)ग्नय इत्याह तस्मादग्नय आधातव्या-

अग्निहोत्रमित्याह तस्मादग्निहोत्रे रमन्ते-

यज्ञ इति यज्ञो हि देवास्तस्माद्यज्ञे रमन्ते-

मानसमिति विद्वाँ स स्तस्माद्विद्वाँस

एव मानसे रमन्ते-

न्यास इति ब्रह्माब्रह्मा हि परः परो हि ब्रह्मा तानि वा एतान्यवराणि पराँसि न्यास एवात्यरेचयद्य एव व्वँदेत्युपनिषत्।। [९९]।।

७९ प्राजापत्यो हारुणि स्सुपर्णेयः प्रजापतिं पितरमुपससार किं भगवन्तः परम-व्वँदन्तीति तस्मै प्रोवाच-

सत्येन वायुरावाति सत्येनादित्यो रोचते दिवि सत्य व्वाँचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठित-न्तस्माथ्सत्यं परम व्वँदन्ति-

तपसा देवा देवतामग्र आयन्तपसूरषय-

स्सुव-रन्वविन्द-न्तपसा सपत्नान्-प्रणुदा-मारातीस्तपसि सर्वं प्रतिष्ठित-न्तस्मात्तपः परम व्वँदन्ति-

दमेन दान्ताः किल्बिष-मवधून्वन्ति दमेन ब्रह्मचारिण स्सुवरगच्छ-न्दमो भूताना-दुराधरूषन्दमे सर्वं प्रतिष्ठित-न्तस्माद्दमः परम व्वँदन्ति-

शमेन शान्ता शिशवमाचरन्ति शमेन नाकं मुनयोऽन्वविन्दञ्छमो भूतानान्दुराधरूष-ञ्छमे सर्वं प्रतिष्ठित- न्तस्माच्छमः

परम व्वँदन्ति-

दान य्यँज्ञाना व्वँरूथन्दक्षिणा लोके दातारꣳ सर्वभूतान्युपजीवन्ति दानेनाराती-रपानुदन्त दानेन द्विषन्तो मित्रा भवन्ति दाने सर्वं प्रतिष्ठित-न्तस्माद्दानं परम व्वँदन्ति-

धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठित-न्तस्माद्धर्मं परम व्वँदन्ति-

प्रजननं व्वै प्रतिष्ठा लोके साधु प्रजाया-

स्तन्तुन्तन्वानः पितृणामनृणो भवति तदेव
तस्या अनृणन्तस्मात् प्रजननं परम व्वँद-
न्त्यग्नयो वै त्रयी विद्या देवयानः पन्था
गार्हपत्य ऋक्पृथिवी रथन्तर-मन्वाहार्यपचन
य्यँजुरन्तरिक्ष व्वाँमदेव्य-माहवनीय स्साम
सुवर्गो लोको बृहत्तस्मादग्नीन्परम व्वँद-
न्त्यग्निहोत्रꣳ सायं प्रातर्गृहाणान्निष्कृति
स्स्विष्टꣳसुहुत य्यँज्ञक्रतूनां प्रायणꣳसुवर्गस्य
लोकस्य ज्योतिस्तस्मादग्निहोत्रं परमव्वँदन्ति-
यज्ञ इति यज्ञेन हि देवा दिवङ्गता

यज्ञेनासुरा-नपानुदन्त यज्ञेन द्विषन्तो मित्रा भवन्ति यज्ञे सर्वं प्रतिष्ठित-न्तस्माद्यज्ञं परम व्वँदन्ति-

मानसव्वै प्राजापत्यं पवित्रं मानसेन मनसा साधु पश्यति मानसा ऋषयः प्रजा असृजन्त मानसे सर्वं प्रतिष्ठित-न्तस्मान्मानसं परम व्वँदन्ति-

न्यास इत्याहु र्मनीषिणो ब्रह्माणं ब्रह्मा विश्वः कतम-स्स्वयंभु प्रजापति स्सव्वँथ्सर इति -

सव्वँथ्सरोऽसावादित्यो य एष आदित्ये पुरुष स्सपरमेष्ठी ब्रह्मात्मा-

याभिरादित्य- स्तपति रश्मिभि स्ताभिः पर्जन्यो वर्षति पर्जन्येनौषधि वनस्पतयः प्रजायन्त ओषधि-वनस्पतिभिरन्नं भवत्यन्नेन प्राणाः प्राणै र्बलं बलेन तपस्तपसा श्रद्धा श्रद्धया मेधा मेधया मनीषा मनीषया मनो मनसा शान्तिश्शान्त्या चित्तञ्चित्तेन स्मृतिँ स्मृत्या स्मारँ स्मारेण विज्ञान. व्विँज्ञाने- नात्मान व्वेँदयति-

तस्मादन्नन्ददन् थ्सर्वाण्येतानि ददात्यन्नात्
प्राणा भवन्ति भूतानां प्राणै र्मनो मनसश्च
विज्ञान व्विँज्ञानादानन्दो ब्रह्मयोनि-
स्स वा एष पुरुषः पञ्चधा पञ्चात्मा
येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षञ्च
द्यौश्च दिशश्चावान्तरदिशाश्च स वै
सर्वमिदञ्जगथ्स स भूतꣳ स भव्य-
ञ्जिज्ञासक्लृप्त ऋतजा रयिष्ठा श्रद्धा सत्यो
महस्वान्तपसो वरिष्ठाद्ज्ञात्वा तमेवं मनसा
हृदा च भूयो न मृत्युमुपयाहि विद्वान्--

तस्मान्न्यासमेषा-न्तपसामतिरिक्तमाहु-
र्वसुरण्वो विभूरसि प्राणे त्वमसि
सन्धाता ब्रह्मन्त्वमसि विश्वधृत्तेजोदा-
स्त्वमस्यग्निरसि वर्चोदास्त्वमसि सूर्यस्य
द्युम्नोदास्त्वमसि चन्द्रमस उपयामगृहीतोऽसि
ब्रह्मणे त्वामहस ओमित्यात्मानं य्युँञ्जीतैतद्वै
महोपनिषद-न्देवानाङ्गुह्य य्यँ एवव्वँद
ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो
महिमानमित्युपनिषत्।। [१००]।।

८० तस्यैव व्विँदुषो यज्ञस्यात्मा
यजमान श्श्रद्धापत्नी शरीरमिद्ध्म-मुरोवेदि
र्लोमानि बर्हि र्वेदश्शिखा हृदयय्यूँपः काम
आज्यं मन्युः पशु स्तपोऽग्नि र्दमश्शमयिता
दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरद्ध्वर्यु
र्मनोब्रह्मा श्रोत्रमग्नी-द्यावद्ध्रियते सा दीक्षा
यदश्नाति तद्धवि र्यत्पिबति तदस्य सोमपान
य्यँद्रमते तदुपसदो यथ्सञ्चरत्युपविश-
त्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखन्तदाहवनीयो
या व्याहृतिराहुति र्यदस्य विज्ञानन्तज्जुहोति

यथ्सायं प्रातरत्ति तथ्समिध यँत्प्रात-
र्मद्ध्यन्दिनꣳ सायञ्च तानि सवनानि ये
अहोरात्रे ते दर्शपूर्णमासौ येऽर्द्धमासाश्च
मासाश्च ते चातुर्मास्यानि य ऋतवस्ते
पशुबन्धा ये सव्वँथ्सराश्च परिवथ्सराश्च
तेऽहर्गणा स्सर्ववेदस व्वाँ एतथ्सत्र-
य्यँन्मरण-न्तदवभृथ एतद्वै जरामर्यमग्निहोत्रꣳ
सत्रय्यँ एव व्विँद्वानुदगयने प्रमीयते
देवानामेव महिमानङ्गत्वा ऽऽदित्यस्य
सायुज्यङ्गच्छत्यथ यो दक्षिणे प्रमीयते

पितृणामेव महिमानङ्गत्वा चन्द्रमस स्सायुज्यꣳ सलोकतामाप्नोत्येतौ वै सूर्या चन्द्रमसो र्महिमानौ ब्राह्मणो विद्वानभिजयति तस्माद्-ब्रह्मणो महिमानमाप्नोति तस्माद्-ब्रह्मणो महिमानमित्युपनिषत्।। [१०१]।।

अंभस्येकपञ्चाशदुत्तरशत-ञ्जातवेदसे चतुर्दश भूरन्नं भूरग्नये भूरग्नये चैकमेकं पाहि पाहि चत्वारि चत्वारि यश्छन्दसान्द्वे नमो ब्रह्मण ऋतन्तपो यथा वृक्षस्यैकमेक-मणोरणीयाꣳश्चतुस्त्रिꣳश थ्सहस्रशीर्षꣳ षड्विꣳशतिरादित्यो वा एष आदित्यो वै तेज एकमेकन्निधनपतये त्रयोविꣳ शतिः सद्योजातन्त्रीणि वामदेवायैकमघोरेभ्यस्तत्पुरुषाय द्वेद्वे ईशानो नमो हिरण्यबाहव एकमेकमृतꣳसत्यन्द्वे सर्वो वै चत्वारि

कद्रुद्राय त्रीणि यस्य वैकङ्कती कृणुष्वपाजो ऽदितिरापो वा इदमेकमेक-मापःपुनन्तु चत्वार्यग्निश्च सूर्यश्च नव नवोमिति चत्वार्यायातु पञ्चौजोऽसि दशोत्तमे चत्वारि घृणिस्त्रीणि ब्रह्ममेतुमाय्याँस्ते ब्रह्महत्यान्द्वादश ब्रह्ममेधया ऽद्यान इमं भ्रूणहत्यां ब्रह्ममेधवा ब्रह्मादेवानामिदं वीरहत्यामेकान्नविँ शति रेकान्नवि शति मेधा देवी मेधां म इन्द्रश्चत्वारि चत्वार्यामां मेधा द्वे मयिमेधामेकमपैतु परव्वाँतं प्राणमंमुत्र भूयाद्धरिँ शल्कैरग्निं माछिदोमृत्यो मानोमहान्तं मानस्तोके प्रजापते स्वस्तिदास्त्र्यंबक य्यँते सहस्रमयुतन्द्वे द्वे मृत्यवे स्वाहैकन्देवकृतस्यैकादश यद्वो देवाः कामोऽकार्षीन्मन्युरकार्षीन्द्वेद्वे तिलाञ्जुहोमि गावश्श्रियं प्रजाः पञ्च तिलाः कृष्णाश्चोरस्यश्रीः प्रज्ञातु जातवेदस्सप्त प्राणवाक् त्वक्छिर उत्तिष्ठ पञ्च पृथिवी शब्द मनोवागव्यक्तात्माऽन्तरात्मा परमात्मा मे क्षुधेऽन्नमय

पञ्चदशाग्नये स्वाहैकं चत्वरिꣳशदोन्तद्ब्रह्म नव श्रद्धायां प्राणे निविष्टोऽमृतञ्जुहोमि चतुर्विꣳशति श्श्रद्धायां प्राणे निविश्यामृतꣳहुतं दशाङ्गुष्ठमात्रः पुरुषो द्वे वाङ्म आसन्नष्टौ वयस्सुपर्णाः प्राणानाङ्ग्रन्थिरसि द्वे द्वे नमो रुद्रायैकन्त्वमग्नेद्युभिर्द्वे शिवेन मे सन्तिष्ठस्व सत्यं प्राजापत्य स्तस्यैवमेकमेकमशीतिः।।[८०]।।

सहनाववतु। सहनौ भुनक्तु।
सह वीर्यङ्करवावहै।
तेजस्विनावधीतमस्तु माविद्विषावहै।
ओं शान्तिश्शान्तिश्शान्तिः।।

हरिः ओ(३)म्।।

तैत्तिरीयोपनिषदि चतुर्थः प्रश्न स्समाप्तः।।